❀ श्रीगणेशाय नमः ❀

गुरुमण्डलग्रन्थमालाया चतुर्विंशम्पुष्पम्

# ॥ मनुस्मृतिः ॥

( मेधातिथिभाष्य समलङ्कृता )

( प्रथमादिषष्ठाध्यायपर्यन्ता )

## पूर्वार्द्धम्

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयम्भैरवम् ।
सिद्धौघं वटुकत्रयम्पदयुगं दूतीक्रमं मण्डलम् ( शाम्भवम् )॥
वीरान्द्वयष्टचतुष्कपष्टिनवकं वीरावलीपञ्चकम् ।
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

५, क्लाइव रो,
कलकत्ता—१

| वैक्रमाब्दः | प्रथमं संस्करणम् | ख्रैस्ताब्दः |
| --- | --- | --- |
| २०२४ | १००० | [illegible] |

॥ श्रीगणेशाय नमः

# पीठिका

श्रीनन्दनन्दन व्रजविहारी की असीम अनुकम्पा से मनुस्मृति को मेधातिथिभाष्य के सहित आदरणीयसहृदय धुरीण विद्वद्वर्ग के कर-कमलों में भेंट करते हुए अमन्द आनन्द सन्दोह का अनुभव होता है।

इस टीका को आज के वर्षों पूर्व स्वर्गीय महामहोपाध्याय डाक्टर श्रीगङ्गानाथजी झा भूतपूर्व उपकुलपति प्रयाग विश्वविद्यालय के सम्पादकत्व में एशियाटिक सोसाइटी, कलकत्ता द्वारा तीन जिल्दों में बायोब्लिथिकाइण्डिका सिरीज में प्रकाशित किया गया था। इस स्वातन्त्र्योत्तर काल में संस्कृत के धर्मशास्त्रमूर्धन्य इस मनुसंहिता ग्रन्थ के अतिविरल मेधातिथि-भाष्य का सुलभता से प्राप्त होना कठिन था। मेधातिथि भाष्य को एक योजनानुसार मैं सर्वप्रथम ही गुरुमण्डल ग्रन्थमाला के स्मृतिसन्दर्भ के प्रथम भाग (मनुस्मृति के साथ ही) में ही प्रकाशित करवाने का विचार करता था परन्तु दैवदुर्विपाक से ऐसा उस समय सम्भव न हुआ। अब इसे विलम्ब से ही सही स्वतन्त्ररूप में विद्वद्वर्ग की सेवा में निकालने में कुछ संकोच तो अवश्य है परन्तु सङ्कल्पवल की पूर्ति होने से आत्मसन्तोष भी कम नहीं। भगवान् मनु के आदेश रूप विश्व को हित के लिये सदाचरण और विधिनिषेध रूप इस स्मृति के हार्द को यथार्थ रूप से व्यक्त करने में पूर्णता देखकर मुझे इस टीका के ऊपर दीर्घकाल से ही अति श्रद्धा है। जो भाष्य ग्रन्थकर्त्ता के अभिप्राय का शब्दशः अनुगमन कर शास्त्रीय दृष्टि से उसके भाव को प्रकट करता है वही धन्य है। भगवान मेधातिथि की इस ओर मनुस्मृति के सम्पूर्ण गूढार्थ को प्रस्तुत करने की अपनी अपूर्व शैली है और है ग्रन्थटीका में स्थान-स्थान पर नाना विषयों के साधिकार प्रतिपादन का अपना सविशेष लक्ष्य।

इस भाष्य के विषय में यह प्रसिद्धि है तत्तद् द्वीपान्तर से साध्य सामग्री का सङ्कलन कर प्रस्तुत रूप में उपस्थित किया गया है।

मान्या काऽपि मनुस्मृतिस्तदुचिता व्याख्याऽपि मेधातिथेः।
सा लुप्तव विधेर्वशात्कचिदपि प्राप्यं न तत्पुस्तकम्॥
क्षोणीन्द्रो मदनः सहारणसुतो देशान्तरादाहृतैः—
जीर्णोद्धारमचीकरत्तत इतस्तत्पुस्तकैर्लेखितैः॥

मनुस्मृति की इस धर्मशास्त्र के अनुरूप व्याख्या मेधातिथि की रचित लुप्त थी इस प्रकार विधिवशात् कहीं भी वह पुस्तक उपलब्ध नहीं होती थी श्री सहारण के सुपुत्र पृथिवी के अधिपति ( राजा ) मदन ने देशान्तरों से उन लिखित पुस्तकों से सहायता लेकर फिर यहां जीर्णोद्धार कराया [ प्राचीन हस्तलिखित ग्रन्थ की प्रतिलिपि मनुस्मृति व्याख्या मेधातिथिभाष्य पर म० म० गङ्गानाथ झा की भूमिका]।

यह बात प्रायः संस्कृत साहित्य के अन्य कई उपयोगी ग्रन्थों पर भी लागू है। अब समय आ गया है कि इन लुप्तप्रायः संस्कृत के मूर्धन्यग्रन्थों को संरम्भ से प्रकाशन योग्य बना जनता-जनार्दन को सुलभ किया जाय।

मेधातिथि के विषय प्रतिपादन को देखने से ज्ञात होता है कि इस विद्वान् ने सकलशास्त्रपारंगत सभी सन्दिहान स्थलों में अतिप्रबुद्ध सूक्ष्मदृष्टि से सिद्धान्त स्थापित करने में विचक्षणता का परिचय देकर अपनी प्रतिभा का विशिष्ट विवरण प्रस्तुत किया है।

यह भाष्य दीर्घकाल से दुर्लभ था जिसके लिये एशियाटिक सोसाइटी कलकत्ता ने प्रभूतव्यय साध्य प्रयत्न किया है। इसे दो भागों में प्रकाशित कर विद्वज्जन की सेवा में प्रस्तुत करने का विचार है। आशा है सर्वभूतहितेरताः विद्वान् इस प्रयत्न को अपना कर हमलोगों के तुच्छ परिश्रम को सफल बनाकर कृतार्थ करेंगे।

इसके सम्पादन में पण्डितद्वय श्री ब्रह्मदत्त त्रिवेदी व्याकरणाचार्य एम. ए. एवं श्रीरामनाथ मिश्र ( दाधीच ) शास्त्री पुराण सांख्य स्मृति काव्यतीर्थ ने

सदा की भांति पूर्ण योगदान किया है। परमपिता इन्हें सर्वदा ऐसी ही कृति को प्रकाश में लाने को सत्प्रेरणा और आत्मशक्ति दें यही एकमेव कामना है।

अपने विषय में निवेदन है कि जो त्रुटियां हम लोगों की अनवधानता रही हैं उनके लिये करबद्ध क्षमा प्रार्थी हूँ और जो सुन्दर बना है उसमें अ सहृदयधुरीण विद्वद्वर्ग का कृपा कटाक्ष ही एकमात्र कारण है।

"कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्"

कुशोत्पाटनी
अमावास्या
सोमवार २०२४

कृपाकांक्षी :—
**मनसुखराय मोर**

श्रीगणेशाय नमः

# विषयसूची

## मेधातिथिकृतमनुभाष्यसहिता मनुस्मृतिः

### प्रथमादिषष्ठाध्यायपर्यन्ता


ास्ताविकम् क ख

प्रथमाध्यायः पृ० १-५७

विषयः श्लोक-संख्या

१ मनुमहर्षिसम्वादारम्भः आत्मनो ब्रह्मणोऽकृत्रिमप्रतिमत्वेत्येवमादि ्युत्पादनार्थो शास्त्रारम्भो युक्त इतिप्रतिपादनम्। भृगुप्रोक्ता संहितेयं मानवी स्मृति-रुपनिबद्धा। १-४

२ सृष्टिक्रमप्रतिपादनम्—तत्र जगत्सर्गादिक्रमेण शास्त्रोक्तनिश्शेषधर्म प्रश्नविषये तस्याव्याकृतावस्थावर्णने कः प्रयोजन इति ब्रह्माद्याः स्थावरपर्यन्ताः संसारगतयो धर्माधर्म निमित्ता इति निरतिशयैश्वर्य हेतुर्धर्मस्तद्विपरीतश्चाधर्म इति तद्रूपपरिज्ञा-नार्थं सर्वोऽपि विस्तार अध्यायपर्यन्तं महाप्रलय समकालं सर्वं तम इति प्रतिपादनम्। ५-६

३ सर्वोऽपि विश्वविवर्तः स्वयम्भुवो ब्रह्मणः।
असौ स्वस्वातन्त्र्यमहिम्ना संकल्पमात्रेण स्वशक्तिप्रभावादण्ड-
समुद्भवंकरोति ब्रह्मव्यपदेशेन प्रसिद्धः स एव सर्वसृष्टिकारणम्। ७-११

४ महत्तत्त्वादिनिरूपणम्; षण्णां प्राधान्यतया आत्मनानुस्यूतं तत्सर्वम्। १२-१६

५ सूक्ष्मात्स्थूलतत्वं प्रजायते पिण्डसृष्टौ प्रधानभूतषट्संख्याकस्य अहंकार-सहितस्य तत्त्वस्य कारणता पञ्चभूतानां धारणं, संहननं पक्तिर्व्यूहश्चावकाश इति गुणाः। १७-२०

६ वेदसंस्थायाः प्राधान्यवर्णनम्। २१

द्वितीयाध्यायः पृ० ५७-२२६

१ धर्मपरिभाषा

(क) विद्वांसो ह्यत्र निष्कामाः प्रवृत्तपूर्वा अनिन्द्याश्च स एव वेदोदितो धर्मो मनुस्मृतौ कथितस्तत्पालनेन मनसः परितोषः। बाह्यहिंसाभक्ष्यभक्षणादिषु मूढा धर्मबुद्ध्या प्रवर्तन्ते तथापि तेषां हृदयाक्रोशनं भवतीति प्रतिपाद्य तै रागद्वेषादि-रहितैर्विहितोधर्मस्तस्य कथनं वेदस्यैव धर्ममूलता कामनायाः संकल्पमूलता। सत्कर्तव्येषु प्रवृत्तिर्निषिद्धेभ्यो निवृत्तिः सङ्कल्पमन्तरा न भवति

(ख) धर्मादिचतुर्विध-पुरुषार्थप्राप्तिरिति वेदागमप्रतिपादितकर्मणां सर्वोत्कृष्टत्वं विविच्य वेदप्रामाण्यं सर्वानतिशेते इति तत्र स्मृतिशीले विदुषामुपाध्यायादागमितविद्यां तथा तदभ्यासपराणां संदनुष्ठानपराणां च स्मृतिः प्रमाणकोटिमाटीकते वेदविदां साधूनां शिष्टाचारश्चेति ।

(ग) सर्वोऽप्येष धर्मरूपतां प्रतिपद्येत।

(घ) मनुप्रतिपादितो धर्मो वेदाविरुद्ध इति वचनम् १-७

२ आगमपूर्णज्ञानमेव सर्वश्रेयोमूलमिति प्रतिपाद्य तद्दर्शितरीत्यैवेहामुत्र सुखं प्राप्यते श्रुतिस्मृती सर्वथैवामीमांस्ये धर्मप्रभवत्वमनयोरिति प्रतिपादनम् ८-१०

३ धर्मे हेतुतर्काश्रयणं समुत्कर्षे व्याघातकमिति निन्दामुखेन नास्तिकस्य ११ वेदनिन्दकता धर्मलक्षणोपसंहारः। ११-१२

४ धर्मस्यानुष्ठानेन यशः कामान् वसूनि नरःसमधिगच्छति । १३

५ श्रुतिद्वैधे न कुत्र विरोधोऽपि तु धर्मावेवोभौ उदितेऽनुदिते इति श्रुतिपदविवेचनरीत्या परिहारत्वकथनम्। १४-१६

६ ब्रह्मावर्त्तदेशपरिभाषा तत्रत्यपरम्पराप्राप्तस्य सदाचारस्य प्रामाण्यम्। आर्यावर्तदेशस्य यज्ञियत्वं प्रकृष्टतयाऽत्र स्वोच्चादर्शजीवनेन सर्वेषां पृथिवीस्थितानां मानवानां ब्राह्मणस्य चरित्रानुकरणत्वम्; एतत्सर्वं धर्ममूलत्वं प्रतिपाद्य सर्वस्य वर्णधर्मस्य प्रतिपादनप्रस्तावः। १७-२५

७ वैदिकैः कर्मभिः संस्कारसंस्कृतस्य कृतकृत्यता द्विजातीनां तेन वैजिकगार्भिक दोषाणां क्षयत्वं ब्राह्मशरीरमेव चरमः पुरुषार्थ इति प्रतिपादनं जातकर्मादिसंस्कार-पूर्वकं ब्राह्मणादिवर्णानां नामकरणे सविशेषः संकेतः करणीयस्तथैव स्त्रीणां नाम-

करणे सुवदना शर्मिष्ठेति सुखेनोच्चं स्पष्टार्थपरिचायकमिति शुभाभिधानं कुर्वीत । २६-३३

८ संस्काराहितपूततनुरेव सर्वथा धर्मानुष्ठानाय योग्यता मनुष्यस्य वर्णाश्रमकार्यो-देश्यत्वेन कुलक्रमागतस्य विविधसंस्कारजातस्य यथोऽवस्थानुकूलं प्रतिपादनं यज्ञोपवीतविषये सविशेषगुणाधानाय वयसो जन्मनः पञ्चषष्ठाष्टमेषु वर्षेषु समुपवीतत्वं, सावित्रीपतितत्वाद् ब्राह्मणादीनां वयोऽतिक्रमतापूर्वकं व्रात्यदोषप्राप्तिरिति च निरूपणम् । ३४-४०

९ वर्णानुसारं ब्रह्मचारिणां नानाचर्मणा सम्बिधानम्: मेखलानां यज्ञोपवीतानां दण्डधारणस्य च प्रक्रिया । ४१-४७

१० ब्रह्मचारिकृत्यवर्णनम् सन्ध्याकर्माग्निहोत्रमनु गुर्वनुज्ञया भिक्षाचरणम् तत्र त्रिवर्णस्य भिक्षायै सम्बोधनप्रकारः यत्र सुतमादरस्तत्र मातरं स्वसारं मातृभगिनीं निजभगिनीं भिक्षेतेति कथनम् । ४८-५०

११ यावता भैक्ष्येण तृप्तिर्भवेत्तन्मात्रमेव गृहीत्वा गुरवे निवेद्य प्राङ्मुखः शुचिर्भूत्वाऽश्नीयादिति प्रतिपाद्य नाना दिक्ष्वभिमुखस्य विविधलाभा इति विविच्य भोजनस्य महत्त्वं प्राणधारकत्वमिति निरूपणमतिभोजनस्य च निषिद्धत्वम् । ५१-५७

१२ आचमनऽविधिर्ब्राह्मतीर्थेन न पित्र्येण कदाचिदपीति निरूप्य ब्राह्मदैवपित्र्य-तीर्थानां परिभाषणं यज्ञोपवीतधारणे उपवीतिनः प्राचीनावीतिनो निवीतिनश्च भेदप्रदर्शनम् । मेखलादण्डयज्ञोपवीतकमण्डलूनां नाशे पुनर्धारणं मन्त्रसहितं जलस्नानपूर्वकञ्चेतिविवरणम् ; तत्पश्चात्केशान्तसंस्कारविषये व्यवस्थापनं जात-कर्मण आरभ्य केशान्तसंस्कारावधि सर्वः कलापः स्त्रीणाममन्त्रक इति विधिकथनम् । ५८-६६

१३ स्त्रीणां कृत्यवर्णनम्—प्रसङ्गत उपात्तं ब्रह्मचारिप्रकरणे चोपनयन-वर्णनम् । ६७-७३

१४ वर्णिकर्म वर्णनम्—गुरोस्सामीप्यम्प्राप्य ब्रह्मचारी नित्यमध्ययनशीलः स्यात् जितेन्द्रियः संयताहारो विनयवांश्चेति गुरोः पादाभिवादनप्रकारः । अध्यापन-काले चित्तसमाहारपूर्वकं प्रमादरहितो सर्वं मनसि गृहीयादिति कथनम् ७४-७७

१५ ओङ्कारस्य सर्वातिशायित्वमिति प्रतिपाद्य सम्पूर्णमनःकायसम्भवानां पापानामपसारणमोङ्कारोच्चारणेनेति निरूप्य ओ३मिति शब्दे अ उ म इति पदानां निरुक्तिस्तत्रस्थं रहस्योद्घाटनञ्च।

(क) गायत्रीप्रशंसनपूर्वकं गायत्रीमात्रजापकस्य सर्वकृतार्थतेति वर्णनं ब्रह्मप्राप्तिश्च प्राणायामप्रशंसा। ७८-८२

१६ विधियज्ञप्रतिपादनपुरःसरं जपस्य सर्वतः समुत्कृष्टत्वमिति विवरणम्। ब्राह्मणस्य जप्येनैव केवलेन सर्वार्थसिद्धिः। ८३-८७

१७ संयमनिरूपणपूर्वकं मनः प्रभृत्येकादशेन्द्रियाणीति प्रतिपाद्य सर्वोऽपीन्द्रियप्रपञ्चः दोषाधाननिपुण इति तन्नियम्य सिद्धिं प्राप्नुयादथ विषयाभिलाषः सर्वथैव वर्ज्यो यतः समुपभोगेन घृतेनाग्निःप्रज्वलति तद्वदेव विषयस्तृष्णाजालं वर्द्धयति विषयिजनः सर्वथैव निन्द्योविषयत्यागी च सर्वदैव प्रशस्य इति कथनम्। विषयवर्जनं सर्वत्रैव वेदतत्त्वाध्याययज्ञनियमतपस्यासु मनो विधेयं तद्विना न कुत्रापि सिद्धिः। ८८-९७

१८ जितेन्द्रियप्रशंसनम्; इन्द्रियक्षरणेन प्रज्ञाहानिः। योगविधिना जितेन्द्रियतां संसाध्य सर्वशास्त्रसार-प्रापक-पुरुषार्थप्राप्तिः। ९८-१०६

१९ संध्याविधिं तत्समयनिश्चयपूर्वकं सावित्रीजपपरतां च प्रतिपाद्य नैत्यके कर्मणि ब्रह्मसत्रसत्त्वान्नानध्याय इति विवेचनपुरःसरं धर्मार्थकाममोक्षप्राप्तिः स्वाध्यायशीलस्य वर्षेणैकेनेतिकथनम्। १०७-१०९

२० ब्रह्मदानप्रशंसनपूर्वकं दशविद्यापात्राणां गणनं कस्मै न्यायनिर्णयः कथनीय इति समाधाय विद्यायाः शुचिने दान्ताय सदधिकारिणे विनियोगस्तत्फलजनकत्वमिति च कथनम्। ११०-११५

२१ लौकिकवैदिकाऽऽध्यात्मिक ज्ञानदातु र्गुरोरभिवादनेन सिद्धिः ११६-११७

२२ जितेन्द्रियस्य प्रशंसा नित्याभिवादनशीलस्य आयुर्धर्मयशोबलानां वर्द्धनं भवति; अभिवादन-विज्ञान-स्फोरणम्। अभिवादनप्रकारो, यथाः—भोः शब्दपूर्वं स्वनामगोत्रसहितमभिवादनं सर्वथैव फलावहम्, प्रत्यभिवादनप्रकारः कुशलप्रश्नविधिश्च। ११८-१२७

२३ वेदाध्यापकस्य गुरुत्वम्; स्त्रीषु समभिवादनकाले सविशेषप्रयोजने सत्येव "भवति भगिनि" "भवति सुभगे" एवम्प्रकारेण वचनं ब्रूयादिति परिपाटी

नित्यं स्नानं देवर्षिपितृतर्पणं देवताचर्चनं प्रतिनियतं द्विकालं समिदाधानं पुनर्निषेध-मुखेन मधुमांसगन्धमाल्यरसस्त्रीशुक्तवस्तूनां वर्जनं प्राणिहिंसानिषेधश्च ब्रह्मचर्योपघातानां द्यूतजनवाद-परिवादानृत-स्त्रीप्रेक्षणालिङ्गनपराणां कर्मणां वर्जनम्। एतत्सर्वं ब्रह्मचर्यघातकमिति तद्वर्जनीयम्; रेतःस्कन्दे पुनर्मामेत्विन्द्रियमिति मन्त्रजपः। १७६-१८१

३४ अवकीर्णिव्रतकरणं सर्वोऽपि कृच्छ्रसाधनोपदेशो ब्राह्मणस्यैव नेतरयोः क्षत्रियवैश्ययोः। १८२-१९०

३५ गुरुशुश्रूषा ब्रह्मचारिणो मुख्यो धर्मस्तदुपदेशोनिर्बन्ध्यश्च गुरुसम्मुखे विनीतो यतवागभिमुखासीनश्चस्याद्येन सर्वदैव तस्मिन्नादरबुद्धिर्भवेत्। १९१-१९९

३६ यत्र गुरोर्निन्दा तत्र न गन्तव्यं स्वगुरोः परीवादं श्रुत्वा खरो जायते; निन्दकश्च श्वा संजायत इत्यादि कथनम्। गुरोर्यथा सम्मानं क्रियते तद्वदेव गुरु-पुत्रेऽपि भवेत्। २००-२०९

३७ गुरुयोषितः सवर्णा गुरुवत्पूज्या या असवर्णास्तासां प्रत्युत्थानाभिवादनैः सम्मानं या च गुरुपत्नी युवतिः सा पादयोर्नाभिवाद्या। २१०-२१२

३८ स्त्रीषु दूषणानि प्रकृत्या एताः पुरुषाणां धैर्यच्यावनं कुर्वन्ति अतःकदापि रहःसु ताभिः सह नासीत। २१३-२१५

३९ गुरुप्रसादाल्लब्धा विद्यैव सफला नान्येति निरूपणम्। स्वनित्यकर्मलोपकः पापभाक् प्रायश्चित्तं विना न निष्कृतिरिति प्रतिपादनम्। २१६-२२४

४० आचार्य-पितृमातृ-भ्रातृ-पूर्वजेभ्यः सम्मानप्रदर्शनं परमोधर्मः सर्वेऽप्येते देवतारूपा इति नावमन्तव्याः।

(क) प्रसङ्गत उपात्तं मातृपितृप्रशंसनम्।

(ख) सर्वेभ्योऽपि त्रयाणां गुरुत्वम्। २२५-२३७

४१ सारग्राही सदा भवेदिति सर्वप्रशस्तवस्तुसंग्राहकस्य प्रशंसा अतोऽब्राह्मणादपि विपत्तिकाले विद्या ग्राह्या। २३८-२४१

४२ सर्वं यथाशास्त्रं कर्म कुर्वन्नेव ब्रह्मचारी गुरुकृपाकटाक्षेण ब्रह्म समश्नुते एपविधिर्नैष्ठिकस्य यावज्जीवं ब्रह्मचर्यतेस्थितस्येतिवर्णनम्। २४२-२४९

(ख) य एतान् यज्ञानव्याहतगत्या सम्पादयति स धन्यो यश्च हापयति स जीवन्नेव मृततुल्यः ।

(ग) परिभाषान्तरमपि=वैदिकपरम्पराप्राप्तं अहुतोयज्ञो=जपः, हुतो=होमः, प्रहुतो=भौतिकोवलिः, ब्राह्म्यं हुतं=आतिथ्यकर्म, प्राशितं=पितृतर्पणम् ।

(घ) स्वाध्यायशीलो जनः सर्वं स्थावरं जङ्गमं प्राणिजातं धारयतीति स्वाध्यायोऽध्येतव्यः ।

(ङ) अग्नावाहुतिदानेनाऽऽदित्यः प्रीयते रसेन स एव सर्वजगत आत्मा तत्र विज्ञानं रसादाकर्षणं वृष्टिरूपेण करोत्यसौ भगवान् तेनान्नाद्युत्पत्तिरितियज्ञःसर्वेषां धारक—इति प्रतिपादनम् ।

७ गृहस्थाश्रमप्रशंसावर्णनम् ।

सर्वजन्तुप्राणधारणं वाय्वाधीनं तद्वदेव सर्वेषामाश्रयो गृहस्थः । ज्ञानदानान्नदानयोरनुग्रहकरणाद्गृहस्थस्य समेषां ज्येष्ठत्वम् ॥

गृहस्थेन सर्वदैव संयतेन्द्रियेण भाव्यम् । ऋतुकालवर्जं दारसेवनं न करणीयं, परदारवर्जनमशेषान्नेन भोजनञ्च प्रयोज्यम् । एतत्सर्वं सुखमत्यन्तमिच्छता सर्वदैव सम्पादनीयम् । गृहिभ्यः सर्वेऽप्याशासते नित्यकर्मण्यप्रमत्तेन सदा भाव्यम् । ६७-७३

८ वैश्वदेवस्य सिद्ध्यर्थं पाकसिद्धौ अग्नीषोमाभ्यां धन्वन्तरये द्यावा पृथिवीभ्यां इन्द्रयमवरुणसोमेभ्यस्तत्पार्षदेभ्यश्च मरुद्भ्यो वनस्पतिभ्य उच्छीर्षकस्थाने श्रियै गृहस्याधोभागे भद्रकाल्यै ब्रह्मवास्तोष्पतिभ्यां पृथगाहुती गृहमध्ये विश्वेभ्यो देवेभ्य आकाशे दिवाचारिभ्यो रात्रिचरेभ्यश्च भूतेभ्यो गृहस्य पृष्ठभागे दक्षिणस्यांदिशि पितृभ्यश्च वलिं दद्यात् । शुनां पतितानां श्वपचचण्डालादीनां पापरोगिणां पक्षिकृमिकीटपतङ्गानां च कृते भूमिरजोरहिते भागे वलिर्देयेति प्रतिपाद्य विधिनाऽनेन गृहिणः सर्वप्राणिप्रीणनेन निष्कल्मषत्वं प्राप्तुवन्ति । ७४-८३

अतिथि-पूजन-विधिः ।

ब्रह्मचारिणे भिक्षादानमाहात्म्यम् ।

ब्रह्मवादिनां सत्कारप्रशंसनम् ।

अन्नदानप्रशंसनम् ।

अन्नाभावेऽपि स्वस्तरं भूमिरासनं प्रियहितवाक्चैतानि सर्वथैव दीयेरन् सर्वकालमेतेषु द्रव्याशक्तत्वमेव ।

अतिथिपरिभाषाविवरणम् ।

परपाकग्रहणाशया ये ब्राह्मणा अतिथयो भवन्ति नित्यमेव ते प्रेत्य पशवो भवन्तीति कथनम् ।

अतिथिः स्वर्गसंक्रम इति प्रणाल्या तस्य जातिभेदवर्जं पूज्यता ।

सर्वेषु भुक्तवत्सु दम्पती भुञ्जीयाताम् । ८४-१०६

९ सर्वं नैत्यकं विधायैव शेषभुग्गृही सर्वोत्कर्षेण विजयते आत्मकारणाद् यश्च पचति सोऽघं भुङ्क्ते । सतिकार्येसायं प्रातर्वैश्वदेवममन्त्रं धर्मपत्नी कर्तुमर्हति । १०७-१२६

१० श्राद्धविधिः-मासानुमासिकं श्राद्धमन्वाहार्यं तत्र संक्षेपविधिरेव श्रेयः-साधनत्वमातनोति विस्तरं नैव करणीयम्, पित्र्ये त्रयाणां दैवे द्वयोरेवामन्त्रणीयजन-परिगणना दैवपित्र्ययोःश्रोत्रिय एव योग्यो नान्यः ।

अविद्वान्न कदापि निमन्त्रयितव्यस्तथा करणे पितॄणां नीचगतिप्राप्तिरिति वर्णनम् अविद्वान् निमन्त्रितोऽपि पितृकर्मणि न भुञ्जीत ।

११ चतुर्विध-ब्राह्मणानां वर्णनम् । तेषां निमन्त्रणेऽर्हत्वम् एतेषां ज्ञाननिष्ठायाः कव्यार्थं सभाजनीयता । ज्ञाननिष्ठ-तपोनिष्ठ-तपः-स्वाध्यायनिष्ठ-कर्मनिष्ठानां हव्येऽपि समर्हणत्वं च श्राद्धे मित्रं यत्र कुत्रापि प्रेमसम्बन्धो यस्य पुरुषस्याऽथ च द्वेषो वा तं न निमन्त्रयीतेति वचनम् । १२८-१३६

श्राद्धविधौ हविःषु च मित्रप्रधानताप्रतिषेधः तत्र दक्षिणाफलमपि ।

अतः श्राद्धे सर्वदैव वेदपारगं बह्वृचं शाखान्तगमध्वर्युं छन्दोगं समाप्तिकम्वा भोजयेत् सैव यज्ञकर्मणि व्यवस्था । १३७-१४६

१२ पुनर्मुख्यविध्यभावे ( यच्छ्राद्धेऽमावास्यायां श्रोत्रियो विद्वान् साधुचरणः प्रख्याताभिजनः श्रोत्रियपुत्रोऽसम्बन्धी भोजनीयः ) मुख्याभावे प्रतिनिधिन्यायेनाऽनुकल्पविधिरुच्यते ।

मातामहादीनां भगिनीपुत्रं स्वजामातुर्गुरोर्बन्धोश्च सगोत्रं भोजनाय आह्वानं कुर्यात् । ये च ब्राह्मणा दैवे समाहूतास्ते न परीक्ष्याः पित्र्ये तु सर्वथैव परीक्ष्याः । तत्र स्तेन-पतित-क्लीबनास्तिक-वृत्तिकाः सर्वथा वर्ज्याः कुशीलव-गोलक-भृतकाध्यापकादयो निषिद्धाः ।

१३ उभयत्र दैवे पित्र्ये च निन्दिताचाराः काणदोषादिसहिता अपाङ्क्तेया द्विजाधमा वर्ज्याः । तेभ्यो दत्तमन्नं रक्षांसि भुञ्जते न पितरः । १४७-१६०

न्नाद्यमेकीकृत्य वारिणा आप्लाव्य अग्रतो विकिरेत्। भूमिप्रदेशे एतस्य दर्भेषु विकिरणम् तच्चा संस्कृतप्रमीतत्यागि कुलयोषितां भागस्तेदुद्दिष्टत्वाच्छास्त्रेपु निर्देशास्य।

श्राद्धे दर्भ, अपराह्णकाल वास्तुसम्पादनतिला अकार्पण्येन अन्नव्यञ्जनदानं, अन्नसंस्कारविशेषः; वैदिका विप्राश्च शुभसम्पदि परिगण्यन्ते। रात्रि-श्राद्ध-निषेधवर्णनम्।

उपसंहारः २७६

चतुर्थाध्यायः ३७२-४७३

१ गृहस्थधर्म-वर्णनम् १-२

गुरुगृहकालसमाप्त्यनन्तरं कृतविवाहो गृहस्थाश्रमे तिष्ठेत्। तत्र निरापत्तया ह्यद्रोहेणाल्पद्रोहेण जीवनवर्तनम्। याञ्चा द्रोहः स्वल्पयाचनमल्पद्रोहः। वृत्तौ तु याजनाध्यापने कुसीदं वृत्तिविधानेऽधिकं समावेश्य अल्पीयसी या उञ्छवृत्तिः स अल्पद्रोहः।

२ धनसञ्चयाय गृहस्थमात्रापेक्षा अतोऽक्लेशेन शरीरस्य धनसञ्चयाय यत्नः करणीयः। ऋतामृतप्रमृत—सत्यानृत—इतिशब्दानां विशेषतः परिभाषणं तैरेव-साधनैर्वर्तनम् सेवा श्ववृत्तिरिति तस्य वर्जनम् कदापि भोगाय धनसञ्चयो न कार्यः स्थित्या। सत्यानृतव्याख्यायामनृतशब्दस्य लोभग्रहणमेवेतिपदवाच्यता। ब्राह्मणः सञ्चयशीलो न स्यादतोऽश्वस्तनिक एव ज्यायान्। यश्च बहुकुटुम्बकः उञ्छशिले याचिता याचितलाभ-कृषि-वाणिज्यानि चाध्यापन-याजन-प्रतिग्रहा वृत्तीः कुर्यात्। पूर्वप्रतिपादित प्रथमाध्यायपठितषट् कर्मणां नात्रग्रहणम्। पुनरग्निहोत्रपरायणः शिलोञ्छाभ्यां स्वजीवनं यापयेत् कदापि लोकवृत्तं न कथयेत् वृत्तिकृते। सन्तोष एव जीवनमिति विचार्य जीवनं परिचालयेत्। ३-१३

३ वेदश्रुतिस्मृतिप्रतिपादितकर्मणां नित्यमेव सम्पादनं विधाय स्व-परम-लक्ष्यं ब्रह्मप्राप्तिरूपं न त्यजेत्। आपत्तावपि गीतवादित्रैर्धनं नार्जयेत्। विषयेषु मनो न प्रवर्तयेत्। यथायथं लोकव्यवहारानुरूपं वेशवाग्बुद्धिसारूप्यं सम्पादयन् विचरेत्। १४-१८

४ शास्त्र-प्रशंसनम् १६-२०

यजुर्वेदब्राह्मणयोः प्रतिषेधः। वेदाध्ययनसमाप्तावारण्यकमधीत्याऽन्यो ग्रन्थो नाध्येतव्यः। ऋग्वेदो दैवस्तुतिपरः यजुषां कर्मप्रधानता साम्नां पितृप्रधानता। तत्र उभयोः पाठो न स्यादिति श्लोकाभिप्रायः। एवं सर्वं प्रतिपाद्य पश्चात्संयमनियमाः पर्वतिथिष्विति कथनम्।

१३ व्यवहारविषये करणीयकर्त्तव्यानां निषिद्धाचरणानां प्रथमतः परिगणनम्। १३०-१४१

सर्वथैव भाविक्षेमकृते आशासहितः प्रवतत। सत्याश्रयी सदा स्यात्; अप्रियं कदापि न ब्रूयात्। सत्यं प्रियमपि भवेत्तथापि असत्यं त्रिकालेऽपि न ब्रूयात्। कदापि व्यर्थचेष्टा न करणीया।

१४ ब्रह्माभ्यासपरायण एव सदा भवेत्तेन जीवनसार्थक्यं भवति दूरादेव मूत्रोत्सर्गं दूरत एव पादावसेचनमुच्छिष्टान्ननिक्षेपोऽपिदूरत एव। पूर्वाह्णे करणीयकृत्यानां परिगणनम्। १४२-१५१

नित्यकर्म सन्ध्यावन्दनं प्रसाधनं च दन्तधावनादिकं दैवपूजनं पूर्वाह्णएव धर्ममूलकं सर्वं कुर्वन्मनुष्यः कल्याणं प्राप्नोति।

१५ आचारात्सर्वसिद्धिः १५२-१६०

दुराचरणनिन्दा; यो दुराचारी सः सततं दुःखभागी व्याधिग्रस्तो ह्यल्पायुश्च जायते। यः सदाचारी तस्य लोकमनन्तकम्। संक्षेपेण सर्वव्यवहारसूत्रं कर्म-यत्परवशं तत्प्रयत्नेन वर्ज्यम् यदात्मवशं तत्सेव्यम्। परवशता दुःखं, सुखञ्चात्मवश्यत्वम्।

येन कर्मणाऽन्तरात्मा परितुष्येत्तत्करणीयं, विपरीतं वर्जनीयम्।

१६ ब्राह्मणाचार्याध्यापकान् पितृमातृगुरून् गास्तपस्विनश्च न कदापि प्रतिकूलाचरणेन द्रूह्यात्। सर्वदैव वेदविषये निन्दा वर्ज्या दैवनिन्दनं द्वेषोऽहंकारादविनयः स्वाभिमानः क्रोधः कटुवाक् चैते वर्जनीयाः। दण्डेन कदापि कस्मैचिदपि न ताडयेत् दण्डताडनेन नरकप्राप्तिः। १६१-१७२

१७ हिंसाप्रधानः कदापि न भवेत्। १७३-१८३

धर्माविरुद्ध एवाऽचरणीयो यतः पापाचरणेन पतनमेव।

अधर्मेण जन एधमानो दरीदृश्यते ततो भद्राणि भुञ्जानोऽपि भवति यदा पतनसमयः समायाति तदा समूलमेव विनश्यति।

धर्मपालनेन सदैव कुलानां वर्द्धनं भवति तेन धर्माचरणं परम्। धर्मवर्जितं सर्वं निषिद्धमतो न करणीयमेव। परम्पराप्राप्तं पितृपितामहादिभिः समाचरितं यथा सततं समुद्धार इति प्रतिपाद्य कदापि कैर्नाभिहितादौ न कर्त्तव्य इति कथनम्। सर्वलोकजयोऽयं मार्गः।

सर्वत्रर्त्विगाचार्य-पितृमातुलातिथि-श्वशुरादिष्वार्चनीयतासम्मानेन देवबुद्धिरेव निष्पन्ना भवति. अतः कदापि विभिन्नकाले वचनमुखंनरो न वाणी न प्रयोक्तव्ये।

१८ प्रतिग्रह-निन्दनम्। १८६-१९६

एतत्सर्वदैव ब्रह्मतेजोविनाशकम्।

अविदुषा प्रतिग्रहो न ग्राह्यो यदि किञ्चिद्गृह्णातीत्याह तदा अम्भसि पाषाणशिलामज्जनं यथा जायते तद्वदेव तस्य पतनम्।

१९ दानदाताऽपि सर्वथाऽपात्राय न दद्यात् — १९७-२००

यः कश्चन छद्मना किञ्चित्प्रतिगृह्णाति तत्सर्वं प्रतिग्रहीतुरेव पतनाय।

२० परकीयनिपानेषु स्नानात्तन्निर्माणकर्त्तुर्दुष्कृतेन लेपभाक्ता। २०१-२०३

परेषां यानस्य शय्याया आसनस्य कूपोद्यानगृहाणां चोपयोगेन चतुर्थांश-पापस्यभागी जायते भोक्ता। ये प्रकृत्या प्रवहणशीला देवनदीतडागा देवखातानि सरांसि च तत्र स्नायात्।

२१ यमनियमपालन-विधिः। २०४

२२ अन्नप्रतिषेधप्रकरणम्। २०५-२२५

अश्रोत्रियसम्पादिते यज्ञे ग्रामयाजिकृते च स्त्रिया षण्ढेन,यज्ञे कृते च ब्राह्मणो न भोजनं चरेदेवं करणेन देवानां प्रतिकूलता जायते गणान्नगणिकान्नादि-भक्षणप्रतिषेधः। राजान्न-शूद्रान्न सुवर्णकारान्नादिनिषेधः।

२३ एतेषां समेषामबुद्धिपूर्वकं भोजनं यदा कृतं भवति तदाऽपि प्रायश्चित्तीयते।

इष्टापूर्तादिकं सर्वथा श्रद्धयैव कुर्यात्। २२६-२३

सर्वेषां दानानां ब्रह्मदानं विशिष्टतमम्; येन शुद्धभावेन यस्मै प्रदीयते तत्सर्वं सफलीभवति।

२४ नाना-शुभकार्येषु विस्मयमिथ्याभाषणापवदन—दानपरिकीर्तननिषेध-वर्णनम्। २३५-२३७

२५ धर्मस्य पालनं त्रिकालाबाधितसत्यं, शनैः शनैर्मनुष्यो धर्मं संचिनुयाद्येन परलोके सहायता भवेदमुत्रापि कल्याणमयं जीवनं स्यात्। २३८-२४४

धर्मप्रशंसा भौतिकदेहस्य जीवनपर्यन्तमात्मसम्बन्धस्तदनु सूक्ष्मदेहेन धर्मगत्या नानाविधशुभयोनिषु चङ्क्रमणम्। अतः कर्तव्यो धर्मसङ्ग्रहः।

२६ उत्तमैःसह संवेशनेन श्रेष्ठता। २४५-२४६

व्रतधारकस्य सर्वं सुलभमिति प्रतिपादनम्।

२७ अधार्मिकोऽपि पुरुषः स्वात्मानं धार्मिकं मन्यते स आत्मवञ्चक इति कथनम्। २४७-२५०

२८ इत्थं महर्षि-पितृदेवानां स्वाध्यायेन, सन्तानोत्पादनेन यज्ञैश्च सर्वथाऽनृणी भूत्वा पुत्राय सर्वं दत्वा त्यक्ताहंकारो न्यासको भूयात्। २५१-२५६

२६ गृहस्थकृत्यवर्णने फलश्रुतिः। २५७-२६०

यः कश्चन वेदशास्त्रवित् प्रोक्तप्रकारेण जीवनं यापयति तस्य ब्रह्मलोकप्राप्तिः सुनिश्चितेति वर्णनम्। पृष्ठाङ्क

पञ्चमाध्यायः ४७४-५६२

१ मृत्युकारणजिज्ञासमानेभ्यऋषिभ्यो भृगुणा वेदानभ्यास आचारस्य वर्जनमालस्यमन्नदोषश्च मृत्युकारका इति प्रत्युत्तरदानम्। १-४

२ अभक्ष्यभक्षणनिषेधप्रकरणम्। ५-२५

लशुन-गृञ्जन-पलाण्डु-कवकानाममेध्यप्रभवत्वेनाऽभक्ष्यत्वम्। लोहितवृक्षनिर्यासाश्छेदनाद्येसमुत्पन्ना शेलुं गव्यं सद्यःप्रसूतायागोः क्षीरञ्च सर्वथा विवर्जयेत्।

वृथाकृसरसंयावं पायसापूपमनुपाकृतमांसानि देवान्नानि हवींषि च निषिध्यन्ते।

अनिर्दशाया गोः क्षीरं,औष्ट्रमेकशफमविकमित्यादिसर्वं सन्धिनीक्षीरं विवत्साया गोश्च पयः सर्वथाऽभक्ष्याणि।

दधि, शुक्तेपुभक्ष्यं, दधिसम्भवं सर्वं च यानि जलयोगेन अम्लतां जनयन्ति तानि सर्वदाऽभक्ष्याणि।

आममांसभक्षकाणां कङ्कगृध्रकाकादीनां मांसं वर्ज्यं तथा ग्रामनिवासिनः सर्वेऽपि पक्षिविशेषा वर्ज्याः ये ऽभक्ष्यत्वेन शास्त्रेषु निर्दिष्टास्ते वर्ज्याएकशफाश्च।

ये शवस्पर्शका एतेषां चैकेन दिनेन रात्र्या च त्रिरात्रैस्त्रिभिर्दिनैः शुद्धिः। ये च समानोदकास्ते त्र्यहैरेव शुद्धाः।

गुरोःशावाशौचे शिष्यस्य दशरात्रेण शुद्धिः। गर्भस्रावेसति मासतुल्यदिवारात्रिभिः शुद्धिः। रजस्वलायां सत्यां स्नानेन शुद्धिर्विधीयते। ऊनद्विवार्षिकस्य बालस्य प्रेतंशरीरं ग्रामाद्वहिर्भूमिं निखाय स्थापयित्वा तत्र नास्थिसंचयविधिः। एतादृग्वालकस्य नाग्निसंस्कारो न चोदकक्रिया। आत्रिवर्षं बालस्यमृतस्य नोदकक्रियेष्यते। शाढं जातदन्तस्य शास्त्रचोदितं व्यापारं कुर्यात् नाम करणमनु तस्य भवेदेषोऽपि विकल्पः।

असंस्कृतस्त्रीणां याभिस्त्रिभिर्वाङ्मात्रेण प्रतिग्रहणं विधाय यौनसम्प्रयोगः कृतस्तासां मरणे त्र्यहाच्छुद्धिः सनाभयः पितृपक्ष्यास्तु त्रिरात्रेण शुद्ध्यन्ति। शावाशौचे ह्यक्षारलवणान्नाः नदीतडागादिषु दिनत्रयं यावन्निमज्जनमवसर्पणवर्जनं मांसाशनं निषिद्धम्। स्थण्डिले परसङ्गवर्जं शयनं विधानम्। सन्निकटस्थानां शावाशौचस्यैष विधिः। विदेशे स्थितानां यदवधि दशदिनावधिरवशिष्यते वृत्तप्राप्तिस्तावदेवाशुचिः।

दशाहे व्यतीतेऽपि त्रिरात्रमशुचित्वं स्यात्। यदि सम्वत्सरो व्यतीतो भवति तदाऽपामुपस्पर्शनेन शुद्धिः। दशदिवसे व्यतीते सति यदि कस्यचन ज्ञातिमरणं पुत्रस्य जन्म जानीयात्तदा सचैलस्नानं विधाय शुद्धिः। यदि कस्यचिदाशौचकाले प्राप्ते मध्ये आशौचनिमित्तं प्राप्तं भवेत्तदा पूर्वशेषेणैवोभयोः शुद्धिः।

(ख) पुनर्वेदशाखाध्यायिनि श्रोत्रिये मैत्रीसङ्गेन च युक्ते त्रिरात्रेण शुद्धिः मातुले पक्षिणीरात्रिं यावत् तद्वदेव शिष्यर्त्विग्वान्धवेषु च शुद्धिः। ७९-९१

राज्ञि मृते एकाहेन शुद्धिस्तथाऽनूचाने गुरावपि, नानावर्णानां पृथक्पृथक् दिनैः शुद्धिः। विप्रस्य दशाहेन शुद्धिः क्षत्रियस्य द्वादशाहिका वैश्यस्य पञ्चदशाहिका शूद्रस्य च मासिकी।

मृत्युजन्मनोराशौचदिनान्यतिक्रम्य शुद्धिमनु सर्वथा वैदिकं कृत्यं न त्यक्तव्यम त्यागे प्रायश्चित्ती भवेन्नरः।

यो ब्रह्मचर्यव्रते स्थितस्तस्य व्रतसमाप्तिपर्यन्तं त्रिरात्रेण शावजननाशौचाभ्यां शुद्धिः। येषां मनुष्यजन्म गृहीत्वाऽपि न सदाचरणं प्रवृत्तं वैदिककर्मानुसारं ते वृथाजाताः। ये च प्रातिलौम्येनोत्पन्नाः प्रव्रज्यासु तिष्ठन्ति आत्मनस्त्यागिनस्तेषामुदकक्रिया निवर्तते।

अन्ये ये द्रवा घृततैलादयस्तेषां शुद्धिः पूर्वभागस्थितस्यांशस्याऽपनयनात् सञ्जायते। संहतानां कठिनानां समुद्धृतदोषाणां प्रोक्षणेन शुद्धिः, शवचण्डाल-पुरीषसंसर्गे सति काष्ठानां तक्षणेन गन्धलेपाद्यपनयनेन च शुद्धिः सम्भवति।

५ यज्ञपात्राणां प्रयोगान्तरे प्रयुज्यमानानां पूर्वप्रयुक्ताज्यहविर्लेपादिसंसर्ग-परिहारार्थमुष्णेन वारिणा लेपाद्यपमार्जनं करणीयम्। तत्र केषांचित्पाणिना क्वचिद्दर्भैः कुत्रचिद्दर्भपवित्रेण संमार्गो विधेयः। बहूनांधान्यवाससां शुद्धिर्जलेन प्रोक्षणादल्पानां जलप्रक्षालनादेव शौचं जायते ११५-१२६

चैलवदेव स्पृश्यचर्मणां शुद्धिः; वैदलानां वृक्षस्य त्वगादीनां शाकमूलफलानां धान्यवदेव शौचं भवति। क्षौमशाणवस्त्रस्य शुद्धिर्गौरसर्षपैः सञ्जायते कौशेयस्य काञ्चनमृदाशुद्धिः कुतपस्यारिष्टकैः अंशुपट्टानां श्रीफलैरेव शुद्धिर्भवति।

ये च गोमेषहस्त्यश्वादीनां स्पृश्यानां जन्तूनां शृङ्गास्थिदन्तादयस्तेषां गोमूत्रोद-काभ्यां शौचं जायते

तृणकाष्ठस्य प्रोक्षणात् तथैव पलालस्याऽपि मार्जनालेपनैर्गृहस्य मृण्मयपात्रस्य पुनः पाकेन शुद्धिः।

भूमेः शुद्धिः पञ्चप्रकारेण। संमार्जनोपलेपनाभ्यां जलेन गोमूत्रेण च सेकः क्षीरेणाऽपि स्मृतिषु प्रतिपादितः। उल्लेखनं शस्त्रादिना लेखाकरणमावापनञ्च। गवां परिवास एकाहमात्रंगोष्ठीकरणमेतेन भूमिशोधनम्।

यदन्नं पक्षिगणैरुच्छिष्टीकृतं न तु कङ्कगृध्रादिभिरथ च गवा घ्रातं अवधूतंमुख-श्वासेनावकम्पितं यस्योपरि क्षुतंभवेत् केशकीटादिभिश्चदूषितं तन्मृदाजलेनप्रक्षेपणाच्च शुद्ध्यति।

अस्पृश्यलिप्ताद्यावद्गन्धो न दूरीभवति तावन्मृत्तिकया वारिणा च पुनः पुनः शोधनेन गन्धाद्यपनेयं तदा शुद्धिः स्यात्।

यददृष्टमद्भिर्निर्णिक्तं यच्च वाण्या प्रशस्यते एतत्त्रयं पवित्रमेव।

आकाशगतं भूमिगतं जलं यद् गोः पिपासाशमनायालं तच्छुद्धम्। अथच यत्र जलं गन्धवर्णरसेनाव्याप्तं भवेत्तच्छुद्धम्।

६ कारुहस्तो यच्चप्रसारितं पण्यद्रव्यं विक्रयार्थमापणेऽथच ब्रह्मचारिहस्तगतं भैक्ष्यं नित्यं शुद्धं भवति। १२७-१२६

स्त्रीणां मुखं नित्यं शुद्धं; पक्वफलपातने स्पृश्यपक्षिणः शुचयः; दुह्यमानाया

गोर्वत्सः शुचिः खेटकादौ यदा मृगं हत्वा गृह्णाति तदा श्वाऽपि शुचिः।

७ शरीरस्थाङ्गविषये निर्णयः। १३०-१४३

नाभेरूर्ध्वं यानि गोलकानि छिद्राणि तेषां मेध्यता यानि तस्या अधस्तादङ्गानि तानि सर्वथाऽपवित्राणि।

मक्षिका उदविन्दवश्चण्डालादीनां छाया गौरश्वः सूर्यकिरणानि रजः पांशुः भूमिर्वायुरग्निरेतानि स्पर्शे मेध्यानि। विण्मूत्रोत्सर्गे शुद्धिमिच्छता सदा यथा गन्धलेपावसर्पणं जायेत तथा जलं मृत्तिका च ग्राह्ये।

दैहिकमलाः सर्वेऽप्यशुचित्वापादकाः। वसा शुक्रमसृङ् मज्जा मूत्रमलं घ्राण कर्णविट्श्लेष्मा दूषिका स्वेदश्चैते द्वादशमलास्ते देहधारिणां भवन्ति। विण्मूत्रोत्सर्गानन्तरं लिङ्गस्य शुद्ध्यर्थं वामहस्तेएका मृद्दातव्या गुदे तिस्र एकत्र करे दश उभयोः सप्त मृत्तिकाश्च दातव्याः।

उपर्युक्तं शौचं गृहस्थानामेव ये ब्रह्मचारिणस्तेषां द्विगुणं वानप्रस्थानां त्रिगुणं यतीनां च चतुर्गुणं भवति।

मूत्रपुरीषोत्सर्गं विधायाऽऽचमनपूर्वकं स्वेन्द्रियाणि समुपस्पृशेत्। लौकिककार्याणि कृत्वा वेदमध्येष्यमाण आचान्तः स्यादेव। विप्रःस्वशुद्ध्यर्थं त्रिवारमाचामेत्। स्त्रीशूद्रावेकवारमेव जलं प्राश्नीयाताम्। उच्छिष्टेन द्रव्यहस्तः संस्पृष्टो भवेत्तद्द्रव्यमाचान्तः शुद्धिं गच्छति।

यदा वमनविरेचनं भवति तदा स्नात्वा घृतप्राशनेन शुद्धिः। अन्नं भुक्त्वाऽऽचामयेत् मैथुनकालमनु स्नानादेव शुद्धिः।

सर्वमेषशौचविधिर्द्रव्यशुद्धिश्च सर्ववर्णानां भूयसेश्रेयसेऽतोऽत्र सावधानतया भाव्यम्

८ स्त्रीणां धर्मवर्णनम्। १४४-१६७

बालया युवत्या वृद्धया वा स्त्रिया साकं न स्वतन्त्रतया गृहेषु किञ्चिदपि कार्यं करणीयम् विशेषतोरहःसु।

स्त्रीणां स्वतंन्त्रतया ऽवस्थानं गर्हितमतो तासां कदापि गृहविच्छेदो न विधेयः। यस्मै पिता भार्यारूपेणेमांस्त्रियं दद्यादथवा भ्राता पितुरनुमते तं सर्वथैव सेवेताराधयन्ती च तत्कुलागतं सर्वं प्रहृष्टमनसा सा कुर्यात्।

स्त्रिया सदैव प्रसन्नचित्तया भाव्यं गृहकार्ये सुचतुरया च गृहोपयोगि भाण्डादिकं

सुसम्मृष्टं शोभावत्कर्तव्यमन्ते गृहव्यये ऽमुक्तहस्तया च भाव्यम्।

पतिरेव स्त्रिया उपचार्यः पतिशुश्रूषणमेव सर्वलोकसाधकमेष एव परोधर्मः पतिव्रतायादेव्याः।

पतिगृहे निन्द्यं वर्ज्यम्।

व्यभिचारे संलग्नाया उभयलोकभ्रष्टताऽतो न कदापि सा स्वकुलाचारोल्लङ्घनं कुर्यात्।

इत्थं धर्म्यं पन्थानमाश्रित्य सा सर्वथैव स्वकुलतारयित्री नित्यं पतिलोकरञ्जिनी जयतितराम्।

एवं पञ्चमाध्याये द्रव्यशुद्धिसहितं स्त्रीधर्मवर्णनम्। पुनर्वानप्रस्थाश्रमधर्मप्रतिपादनम्।

षष्ठाध्यायः ५६३-६०५

१ वानप्रस्थधर्मवर्णनम्। १-१२

क्रमेण गृहस्थाश्रमविधिमनुष्ठाय वने वासं विधाय स्थितो वानप्रस्थी भवेद्यदा क्षीणरागता विषयेषु जायेत।

अथच यदा शरीरे त्वक्शैथिल्यं केशानां पाण्डुरता पौत्रस्यच प्राप्तिस्तदा गृहस्थाश्रमं त्यक्त्वा वनी भवेत्। व्रीहियवमयान्नं तत्पश्चाद्भुञ्जीत नैव। सर्वाणिगवाश्ववस्त्रासनशय्यादीनि त्यक्त्वा पुत्रसंरक्षणे स्वधर्मपत्नीं स्थापयित्वाऽथवा तया सह वनाय प्रस्थातव्यमिति वर्णनम्।

अग्निहोत्रसम्बन्धिसम्भारजातं स्वेन सार्धं गृहीत्वाऽरण्येऽसौ संयमशीलो निवसेत्। ये गृहस्थस्य विहिताः पञ्चमहायज्ञास्तेषां नित्यानुष्ठानं विधातव्यम्। पवित्रैस्तत्र मुन्यन्नैः शाकमूलफलेन वा समोऽपि कलापः सम्पादनीयः।

अरण्यनिवासकाले मृगचर्मणा वस्त्रेण वा परिधानं विधाय नित्यस्नानं हि सन्ध्ययोः सम्पाद्यैकवारं भुञ्जीत। जटाश्मश्रुलोमनखानां कर्तनं न कुर्यात्।

अस्मिन् काले कस्याऽप्याश्रये न भवेद्वन्यमूलफलैरथ च मुनिधान्यैर्जीवननिर्वाहः करणीयः।

सततं वेदप्रयुक्तस्वाध्यायं वनी सम्पादयेत्। दमयुक्तो मदवर्जितः सर्वभूतप्रियहिते युक्तश्च स्यात्। कस्मादपि स्वशरीरयात्रायै याच्ञा न करणीया। सर्वथैवातिथि-

त्रिकालस्नानं पितृदेवतर्पणं शरीरपीडाजननं प्रकृष्टतरं तपः कुर्वन् शरीरं शोषयेत्।

४ महाप्रस्थानवर्णनम्। २५-३३

मौनव्रतधारी ह्यसौ सप्ततिवर्षावधि स्थित्वा पश्चादग्निमात्मनि समारोप्य अनग्निर्वासार्थं पर्णकुटीं त्यक्त्वा कन्दमूलफलाशी भवेत्। सर्वथैव ब्रह्मव्रतपरायणो परिव्राजकपदवीं गत्वा विहारं कुर्वन् भिक्षाशी स्यादेषपन्थाः सुकृतस्य ब्रह्मप्राप्तेश्च विततोऽस्ति। एवं तनुत्यागेन ब्रह्मलोकावाप्तिर्निःसंशयम्।

५ संन्यास-धर्मवर्णनम् ३४-६६

एवं स्वायुपस्तृतीयं भागं विहृत्य चतुर्थे चरणे सङ्गान् त्यक्त्वा निवृत्तविषयाभिलाषः सन् संन्यस्तो भवेत्।

त्रयाणामृणानां शोधनं कृत्वैव मोक्षेमनोनिवेशयेदन्यथा पतनमवश्यम्भावि।

ऋणत्रयं तु देवपित्रर्षिसम्बन्धि तत्र यज्ञेन देवानामृणापनोदनं प्रजया पित्रर्णशोधनं क्रियते, स्वाध्यायेनऋषिभ्य आनृण्यं जायते। मुक्तो भूत्वा सर्वथा विहरेत्। सर्वभूतेष्वात्मबुद्धिं विधाय शत्रुमित्रोदासीनेषु समत्वं वर्तमानः स्वब्रह्मप्राप्तिकर्मणि प्रयतेत। सर्वथा प्रशस्तामनृतां वाणीं वदेत्। इत्थं संन्यासधर्मं सविधि सम्पाद्य ब्रह्मप्राप्तौ यतेत येन जननमरणचक्रात्सर्वथा मुक्तिः स्यात्।

६ प्राणायामविधिः प्राणशुद्ध्यर्थं शरीरदोषशमनार्थञ्चाष्टाङ्गयोगेन ब्रह्मणः स्वगतलक्षणानि विविच्यविचार्यचाऽद्वैतश्रयणं करणीयम्। ७०-८६

७ वेदसंन्यासिकस्य कर्मोपदेशवर्णनम्। ८७-९७

क्रमशो ब्रह्मचर्याश्रमाद्गृहस्थं गृहस्थाद्वानप्रस्थं ततो संन्यासे गत्वा परमांगतिं गच्छेत्। तत्र गृहस्थस्य ज्येष्ठत्वं श्रेष्ठता च सर्वेषां वर्णनामाश्रमाणाञ्चसहार्यकंत्वेन पुनर्दशलक्षणकधर्मस्य वर्णनम्।

एवं धर्मं सेवमानो ब्राह्मणः स्वपुत्रैश्वर्ये सुखं निवसेत्।

संङ्क्षेपतः कृतासूचिः श्रेयसे नोऽस्तु सर्वदा।
प्रसीदतां महादेवः स्वपार्षदगणैर्वृतः।

इति विदुषां विधेयौ लक्ष्मणदुर्गाभिजनब्रह्मदत्तत्रिवेदि-नवलदुर्गाभिनजनरामनाथमिश्रशास्त्रिणौ।

---

ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।

तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्॥ [शुक्लय० ४०-१]

ईश्वरोपदेशोऽयं सृष्टौ सर्वे प्राणिनो समानभूताः। ज्ञानेन सर्वेषां प्राणिनां पूर्णं रक्षार्थं सततं चेष्टमानाःस्वभोगं यः प्रकृतिदत्ता निर्दिष्टस्तं भुञ्जीध्वम्। (केषामपि हिंसा मा कुरुत। सर्वेऽपि प्राणिनः सृष्टिविधौ तत्परिस्थितौ पूर्णतः साहाय्यं भजन्ते)। कस्यापि प्राणिनः शक्तिः (कुत्र) हरणाय मनस्यपि न भावनीयम्। एष एव पन्थाः सुकृतस्य लोके।

वेदश्चैवाभ्यसेन्नित्यं शुचौ देशे समाहितः।
धर्मशास्त्रं तथा पाठ्यं ब्राह्मणैः शुद्धमानसैः॥
स्मृतिहीनाय विप्राय श्रुतिहीने तथैव च।
दानं भोजनमन्यच्च दत्तं कुलविनाशनम्॥
तस्मात् सर्वप्रयत्नेन धर्मशास्त्रं पठेद् द्विजः।
श्रुतिस्मृती च विप्राणां चक्षुषी देवनिर्मिते॥

(लघुहारीत स्मृ०)

समाहितमना शुद्धे देशे समुपविष्टोनरो वेदाभ्यासेन समयाकुर्यात्। उदात्त भावैर्धर्मशास्त्राणां पठन-पाठनं विदधीत। स्मृतिहीनः श्रुतिविरहितश्चोभौ श्वसन्तावपि वैदिककृत्यविहीनौ निषिद्धजीवनायतौ पशुतुल्यौ ताभ्यां समुपहारी-क्रियमाणं दानं भोजनादिकं दानदातृकृते स्वकुलकृते च विनाशकारणमतः सयत्नं धर्मशास्त्र पुराणादिकं सततं पठनीम। अपौरुषेयो वेदः स्मृतयश्चर्षि-प्रसारिताः व्यासकृतं पुराणादिकं सर्वमीश्वरीयमिति तानि मानवकृते नेत्ररूपाणि (प्रकाशात्मकानि) सन्ति।

सर्वेभ्यः सहृदयप्रवरेभ्यो मदीया करबद्धा प्रार्थना यत्ते संस्कृतभाषां पठेयुर्येन जीवनादर्शे महर्षिणां प्रकटितं धर्मतत्वं सर्वभूतहिते रतास्त्वञ्च सर्वसाधारणजनानां भवेद् येन सत्येज्ञानप्राप्तिः स्यात्। एतेन स्वकल्याणमार्गः प्रशस्ततमो भवति।

"कामये दुःखतप्तानां प्राणिनामार्त्तिनाशनम्।"

विदुषां वशम्वदस्य मनसुखरायमोरस्य

५, क्लाइव रो,

कलिकाता—१

# ॥ अथ मनुस्मृतिः ॥

## मेधातिथिकृतमनुभाष्यसहिता ।

मनुमेकाग्रमासीनमभिगम्य महर्षयः ॥
प्रतिपूज्य यथान्यायमिदं वचनमब्रुवन् ॥ १ ॥

वेदान्तवेद्यतत्त्वाय जगत्त्रितयहेतवे ।
प्रध्वस्ताशेषदोषाय परस्मै ब्रह्मणे नमः ॥ १ ॥

चतुर्भिः पदश्लोकैर्विशिष्टकर्तृत्वमनन्यप्रमाणवेद्यपुरुषार्थोपदेशकत्वं चास्य शास्त्रस्य प्रतिपाद्यते प्रतिष्ठार्थम्। प्रतिष्ठिते हि शास्त्रे कर्तृभिः स्वर्गयशसी प्राप्येते यावत्संसारमनपायिनी च भवतः। शास्त्रं च प्रतिष्ठां लभते यदि तत्र केचिदध्ययन-श्रवणचिन्तनादिषु प्रवर्तन्ते। न च बुद्धिपूर्वव्यवहारिणोऽध्ययनादिष्वनवधृत-प्रयोजनाः प्रवर्तितुमर्हन्ति। अतः पुरुषार्थसिद्धावुपायपरिज्ञानार्थमिदं शास्त्रमारभ्यते इत्येतत्प्रतिपादनार्थं श्लोकचतुष्टयमाचार्यः पपाठ।

न च वाच्यम्—"अन्तरेणैवादितः प्रयोजनवचनं वक्ष्यमाणशास्त्रपौर्वापर्य-पर्यालोचनयैवेदं पर्यवस्यामः किं तत्प्रतिपादनार्थेन यत्नेनेति। किंच। उक्तमपि प्रयोजनं यावत्परस्तान्नावमृष्टं तावन्न निश्चीयते। न हि सर्वाणि पुरुषवचांस्यर्थे निश्चयनिमित्तम्। न चैष नियमः सर्वत्र प्रयोजनपरिज्ञानपूर्विकैव प्रवृत्तिः स्वाध्या-याध्ययनेऽतन्निबन्धनायाः प्रवृत्तेर्दर्शनात्। पौरुषेयेष्वपि ग्रन्थेषु नैव सर्वेषु प्रयोज-नाभिधानमाद्रियते। तथाहि। भगवान्पाणिनिरनुक्त्वैव प्रयोजनम् 'अथ शब्दानु-शासनमिति' सूत्रसंदर्भमारभते"।

अत्रोच्यते। आरम्भेऽनवधृतप्रयोजना नैव प्रथमतो ग्रन्थमुपाददीरन्। अनुपादानाच्च कुतः शास्त्रं कार्त्स्न्येन पर्यालोचयेयुः। किंच पौर्वापर्यपर्यालोचनया

यथा चानेन पुरुषार्थोपदेशपरता शास्त्रस्योच्यते तथा पदार्थयोजनात्प्रतिपादयिष्यामः ।

तत्र मनुमभिगम्य महर्षय इदं वचनमब्रुवन् 'धर्मान्नो वक्तुमर्हसीति' । स पृष्टः प्रत्युवाच 'श्रूयतामिति' । एवं प्रश्नप्रतिवचने एकार्थप्रतिपादके तात्पर्येण भवतः। अतो धर्मा अत्र प्रतिपाद्यन्त इत्युक्तं भवति । धर्मशब्दश्च लोके श्रेयःसाधने प्रत्यक्षादिभिर्लौकिकैः प्रमाणैः शब्दादितरैरविहिते प्रयुज्यते । अतः स श्रूयतामिति संबन्धे विशिष्टपुरुषार्थसाधनत्वमुक्तं भवति ।

मनुर्नाम कश्चित्पुरुषविशेषोऽनेकवेदशाखाध्ययनविज्ञानानुष्ठानसम्पन्नः स्मृतिपरम्पराप्रसिद्धः । तमभिगम्याभिमुख्येन तत्समीपं गत्वा, व्यापारान्तरत्यागेन, न यदृच्छया, संगम्य । अनेन चाभिगमनप्रयत्नेन पृच्छ्यमानवस्तुगौरवं वक्तुश्च प्रामाण्यं ख्याप्यते । न ह्यकुशलः प्रतिवचने यत्नेन पृच्छ्यते आगत्य ।

एकाग्रमासीनमेकाग्रं स्थितमेकाग्रं सन्तम् । न त्वत्र बृस्याद्युपवेशनमासनम्, अनुपयोगात् । आसनेन स्वस्थवृत्तिता लक्ष्यते । तथाभूतः प्रतिवचनसमर्थो भवति । 'अभिगम्येति' केवल एव मनुः कर्म । प्रश्नक्रियायास्त्वेकाग्रमासीनमिति विशेषणम् । कुशलप्रश्नानुरूपकथाप्रवृत्त्यादिनैकाग्रमविक्षिप्तमनस्कं ज्ञात्वा प्रश्नश्रवणे दत्तावधानमिदं वचनमब्रुवन् । एकाग्रशब्दो रूढ्या निश्चलतामाह । प्रत्याहारेण परिहृतरागादिदोषसंसर्गस्य विकल्पनिवृत्तौ तत्त्वावबोधचिन्तायां मनसः स्थैर्यमेकाग्रता । तथाभूत एव च संनिहितरूपशब्दादिविषयावधाणे योग्यो भवति, न सदसद्विकल्पयुक्तः । अथवा योगतोऽग्रशब्दो मनसि वर्तते, अर्थग्रहणे चक्षुरादिभ्योऽग्रगामित्वात् । प्रथमप्रवृत्तियुक्तः पुरःसरो लोकेऽग्र उच्यते । एकस्मिन् ध्येये ग्राह्ये चाऽग्रमस्येति विग्रहः, व्यधिकरणानामपि बहुव्रीहिर्गमकत्वात् । अत्रापि व्याक्षेपनिवृत्तिरेवैकाग्रता ।

प्रतिपूज्य यथान्यायम् । न्यायः शास्त्रविहिता मर्यादा—तामनतिक्रम्य—यादृशी शास्त्रेणाभिवादनोपासनादिका गुरोः प्रथमोपसर्पणे पूजा विहिता तथा पूजयित्वा, भक्त्यादरौ दर्शयित्वा ।

महर्षयः । ऋषिर्वेदः; तदध्ययनविज्ञानतदर्थानुष्ठानातिशययोगात् पुरुषेऽप्यृषिशब्दः । महान्तश्च ते ऋषयश्च—तेषामेव गुणानामत्यन्तातिशयेन महान्तो

भगवन् सर्ववर्णानां यथावदनुपूर्वशः ॥
अन्तरप्रभवानां च धर्मान्नो वक्तुमर्हसि ॥ २ ॥

ऐश्वर्यौदार्ययशोवीर्यादौ भगशब्दः । सोऽस्यास्तीति भगवान् । तेन सम्बोधनं भगवन्निति । वर्णशब्दश्च निरूढो ब्राह्मणादिजातिषु वर्तते । सर्वग्रहणं शूद्रावरोधार्थम् । इतरथा महर्षीणां प्रष्टृत्वात् त्रैवर्णिकविषये प्रश्नः कृतः स्यात् । अन्तरं तन्मध्यम् । द्वयोर्जात्योः सङ्करादेकाऽप्यपरिपूर्णा जातिः । अन्तरे प्रभव उत्पत्तिर्येषां तेऽन्तरप्रभवाः अनुलोमप्रतिलोमा मूर्धावसिक्ताम्बष्ठक्षत्तृवैदेहकादयः । न हि ते माता-पित्रोरन्यतरयाऽपि जात्या व्यपदेष्टुं युज्यन्ते । यथा गर्दभाश्वसंयोगजः खरो न रासभो नाश्वो, जात्यन्तरमेव । अतः वर्णग्रहणेनाग्रहणात्पृथगुपादीयन्ते ।

"नन्वनुलोमा मातृजातीया इष्यन्ते" । नेति ब्रूमः । सदृशानेव तानाहुरिति मातृजातिसदृशास्ते न तज्जातीया एव । सोऽप्येषां धर्मो वाचनिको न वस्तुस्वभावसिद्धः । अतः प्रमाणांतरागोचरत्वाद्धर्मप्रकाशनमिह शास्त्रोपदेशादेव । प्रतिलोमानामप्यहिंसादयो धर्मा वक्ष्यन्ते । यत्तु धर्महीना इति तद्व्रतोपवासादिधर्माभावाभिप्रायेण । सर्वपुरुषोपकारिता चानेन शास्त्रस्य प्रदर्श्यते ।

यथावत् । 'अर्हत्यर्थे वतिः'—येन प्रकारेणानुष्ठानमर्हन्ति । इदं नित्यमिदं काम्यमिदमङ्गमिदं प्रधानम् । द्रव्यदेशकालकर्त्रादिनियमश्च प्रकारोऽर्हतेर्विषयः । अनुपूर्वशः । अनुपूर्वः क्रमः । येन क्रमेणानुष्ठेयानि सोऽप्युच्यताम् । "जातकर्मा-

नन्तरं चौडमौञ्जीनिबन्धनेत्यादि"। यथावदित्यत्र पदार्थविषयं कार्त्स्न्यमुपात्तम्। क्रमस्तु पदार्थो न भवत्यतः पृथगनुपूर्वश इत्युपात्तम्।

धर्मशब्दः कर्तव्याकर्तव्ययोर्विधिप्रतिषेधयोरदृष्टार्थयोस्तद्विषयायां च क्रियायां दृष्टप्रयोगः। तस्य तु किमुभयं पदार्थ उतान्यतरत्र गौण इति नायं विचारः क्रियते, ग्रंथान्तरे विस्तरेण कृतत्वादिहानुपयोगाच्च। सर्वथा तावत् 'अष्टकाः कर्तव्याः' 'न कलञ्जं भक्षयेत्' इत्यादावष्टका विषया कर्तव्यता प्रतीयते, कलञ्जभक्षणविषयश्च प्रतिषेधः। तदष्टकाख्यं कर्म धर्मस्तद्विषया वा कर्तव्यतेति फले न विशेषः। धर्मरूपोपदेशाच्च यत्तद्विपरीतमधर्मोऽसावित्यर्थात्सिध्यति। अतो धर्माधर्मावुभावपि शास्त्रस्य विषय इत्युक्तं भवति। तत्राष्टकाकरणं धर्मो ब्रह्महत्यादिवर्जनं च धर्मः, अष्टकानामकरणमधर्मो ब्रह्महत्यायाश्च करणमधर्मः—अयं धर्माधर्मयोर्विवेकः।

अर्हसीति सामर्थ्यलक्षणया योग्यतया प्रवचनाधिकारमाचार्यस्याहुः—यतस्त्वं समर्थो धर्मान्वक्तुमतोऽधिकृतः सन्नध्येष्यसे ब्रूहीति। यो यत्राधिकृतस्तत्तेन कर्तव्यमिति सामर्थ्यगम्यं ब्रूहीत्यध्येषणापदमध्याह्रियते ॥ २ ॥

**त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयम्भुवः ॥**
**अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित्प्रभो ॥ ३ ॥**

"उक्तमदृष्टार्थे व्यापारमात्रे धर्मशब्दो वर्तते। तत्र यथाऽष्टकादौ तस्य प्रयोग एवं चैत्यवन्दनादावपीति। तत्र कतमे धर्मा अत्रोच्यन्त" इति संशये धर्मविशेषप्रतिपादनार्थमुक्तसामर्थ्यप्रतिपादनार्थं च 'त्वमेक इति'। त्वमेवैकोऽसहायोऽद्वितीयः। सर्वस्य विधानस्य कार्यतत्त्वार्थवित्। विधानं शास्त्रं विधीयन्तेऽनेन कर्माणीति। तस्य स्वयम्भुवो नित्यस्याकृतकस्यापौरुषेयस्य वेदाख्यस्य। सर्वस्य प्रत्यक्षाक्षरस्यानुमेयाक्षरस्य च। 'अग्निहोत्रं जुहुयादयं सहस्रमानव' इत्येतया आहवनीयमुपतिष्ठते इति प्रत्यक्ष एव वेदोऽयं होमं विधत्ते। एतयेति च तृतीयया प्रत्यक्षस्यैव मन्त्रस्याहवनीयोपस्थाने विनियोगः। 'अष्टकाः कर्तव्या' इत्यत्र तु स्मृत्याऽनुमीयते वेदः। 'बर्हिर्देवसदनं दामीति' लिङ्गादनेन बर्हिर्लुनातीति' श्रुतेरनुमानम्। अयं हि मन्त्रो दर्शपूर्णमासप्रकरणे पठितो बर्हिर्लवनं च तत्राम्नातम्। अनेन मन्त्रेण लुनीयात् इत्येतत्त नास्ति। मन्त्रः पुनारूपाद्बर्हिर्लवनप्रकाशनसमर्थः। प्रकरणात्सामान्यतः सिद्धो दर्शपूर्णमाससंबन्धः। स्वसामर्थ्येन तु बर्हिर्लवने

प्रयुज्यते । एषा तत्र प्रतीतिः । प्रकरणादसंपूर्णतामात्रेण मन्त्रेण कुर्यात्—कर्मेति यथा शक्नुयादित्यनुक्ताऽपि शक्तिः सर्वत्र सहकारिणी । किं न शक्नोति मन्त्रः कर्तुम् । बर्हिर्लवनं प्रकाशयितुम् । ततः प्रकरणात् स्वसामर्थ्याच्चानेन मन्त्रेण 'बर्हिर्लुनातीति' बुद्धौ शब्द आगच्छति । सविकल्पकविज्ञानैः पूर्वं शब्दः प्रतीयत इति । स बुद्धिस्थः शब्दोऽनुमेयो वेद उच्यते । वेदत्वं च, तस्य असंपूर्णवाक्य-मन्त्रवाक्याभ्यां श्रुत्यन्तराभ्यां स्वसामर्थ्येनोपस्थापितत्वादिति कृतातिप्रसङ्गः ।

अथवा विधिविधानमनुष्ठानं प्रयोजनसंपत्तिः । तस्य स्वयम्भुवो नित्यस्या-नादिपरम्परायातस्य, स्वयम्भुवा वेदेन वा प्रतिपादितस्य, सर्वस्य श्रूयमाणशाखाप्रति-पाद्यस्य प्रतिपन्नार्थसामर्थ्यगम्यस्य च । द्विविधो हि वैदिको विधिः । कश्चित्प्रत्यक्षा-च्छब्दप्रतिपाद्यः । यथा 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम' इति सौर्यचरौ ब्रह्मवर्चसकामोऽधिक्रियते । तस्य चरोश्च प्रवर्तनं साधयत इयमितिकर्तव्यता आग्नेय-वदित्यवगम्यते । उभयत्रापि चेयं प्रतीतिः शब्दावगममूलत्वात् शब्द एव । उभावपि शब्दादभिधानतः प्रतीयेते, तथा चाभिधेयप्रतिपत्तितः । विशेषस्तु व्यवधानादिकृतो न शब्दतां विहन्ति । यथा वापीस्थमुदकं हस्तेनाभिहतं प्रदेशान्तर-मभिहन्ति तदपि हस्तसंयोगेनैवाभिहतं भवति, न तु साक्षात् । शर्कराणां वेत्रक-कर्मण्याद्यप्रयत्नकृता एवोत्प्लुत्योत्प्लुत्य पाताः । तादृशमेतत् । वैकृते कर्मणि विशिष्टेतिकर्तव्यतासम्बन्धः । एवं विश्वजिता यजेतेत्युत्पत्तिर्नाधिकारशून्याऽस्तीति स्वर्गकाम इत्यधिकारावगतिः प्रतिपन्नार्थसामर्थ्यगम्या । अतो द्वैरूप्ये विधानस्य सर्वस्येतिपदम् । सर्वस्य तात्पर्यमेवं रूपम्—वेदमूलाः स्मृतय इति ज्ञापयितुम् । द्वितीये चैतद्दर्शयिष्यामः ।

"ननु लिङादिप्रतिपाद्योऽर्थः कर्तव्यतारूपो विधिः । न च सर्वत्र प्रत्यक्षशब्द-प्रतिपाद्य एव । तत्र किमुच्यते द्विविधो हि वैदिको विधिरिति । निर्वपेदिति कर्तव्यताऽवगम्यते । इतिकर्तव्यताऽर्थसामर्थ्यगम्या उक्तेन प्रकारेण" ।

नैष दोषः । निर्वपेद्यजेतेति न केवले धात्वर्थविषयत्वेऽवगते परिपूर्णा कर्तव्यता भवति यावदंशान्तराण्यधिकारेतिकर्तव्यताप्रयोगरूपाणि नावगतानि । एतैरंशैर्विततरूपो विधिः प्रतीयते । अतोंऽशरूपाण्यपि विधिशब्दाभिलप्यतया न विरुद्धानि ।

एतदेवाह अचिन्त्यस्येति । अप्रत्यक्षस्येत्यर्थः । प्रत्यक्षं ह्यनुभूयत इत्युच्यते,

न चिन्त्यते इति, न स्मर्यत इति। अप्रमेयस्य कल्प्यस्य, प्रायशः स्मृतिवाक्यमूलस्य न हि प्रत्यक्षेण प्रमीयते। अतोऽप्रमेयस्येत्युच्यते। अथवाऽप्रमेयस्येयत्तया परिमातुमशक्यस्यातिमहत्त्वात्। अनेकशाखाभेदभिन्नो वेदो न शक्यते सर्वैः प्रमातुम्। अत एवाचिन्त्यस्य। यदतिबहु तद्दुर्महत्वादचिन्त्यमित्युच्यते। यथा च लोके वक्तारो भवन्ति, 'अन्येषां का गतिः? चिन्तयितुमप्येतन्न युज्यत' इति। मनः किल सर्वविषयम्, अयं चातिमहत्त्वात्तस्यापि न विषय इति। पदद्वयेन बाह्यान्तःकरणाविषयतया महत्त्वस्य ख्यापनेनाचार्यः प्रोत्साह्यते। त्वयैव केवलेनैवंविधो वेद आगमितोऽतस्तस्य यः कार्यरूपस्तत्त्वार्थस्तं वेत्सि जानीषे।

कार्यमनुष्ठेयमुच्यते। यत्र पुरुषोऽनुष्ठातृत्वेन विनियुज्यते—इदं त्वया कर्तव्यमिदं त्वया न कर्तव्यमिति-अग्निहोत्रादि कर्तव्यम् कलञ्जभक्षणादि न कर्तव्यम्। प्रतिषेधोऽप्यनुष्ठानमेव। यद्ब्राह्मणवधस्याननुष्ठानं तदेव प्रतिषेधस्यानुष्ठानम्। प्रवृत्तिश्च क्रियानिवृत्तिश्च क्रियेति। न हि परिस्पन्दमानसाधनसाध्यमेवानुष्ठानमुच्यते, किं तर्हि प्राप्ते तद्रूपे तन्निवृत्तिरपि। यथा 'हितसेवी चिरायुरिति' यः प्राप्ते काले भुङ्क्तेऽप्राप्ते न भुङ्क्ते। अभोजनमपि हितमेव।

अथवा कार्यशब्दः प्रदर्शनार्थो विधेः प्रतिषेधस्य च। एतावदेव वेदस्य तत्त्वरूपः पारमार्थिकोऽर्थः। यस्त्वितिवृत्तसंवर्णनरूपः "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति" स न तत्त्वार्थः, विध्यन्तरेणैकवाक्यत्वात्प्रशंसापरत्वेन स्वार्थनिष्ठत्वाभावात्। अस्ति ह्यत्र विध्यन्तरम् 'तस्माद्बर्हिषि रजतं न देयमिति'। 'सोऽरोदीदि' त्यादीनि 'पुराऽस्य संवत्सराद्गृहे रोदनं भवती' त्यन्तानि तदेकवाक्यतापन्नानि बर्हिषि रजतदाननिन्दया तत्प्रतिषेधं स्तुवन्ति। तदुक्तं 'साध्येऽर्थे वेदः प्रमाणं, न सिद्धरूपे'। अर्थवादानां हि सिद्धरूपोऽर्थः। न हि तदर्थस्य कर्तव्यता प्रतीयते। विध्युपदेशपरत्वं च प्रतीयते। यदि च स्वार्थपरा अपि स्युस्तदा विधिपरत्वं व्याहन्येत। ततश्च प्रतीयमानैकवाक्यता बाध्येत। न च सम्भवत्येकवाक्यत्वे वाक्यभेदो न्याय्यः। न च साध्यस्य सिद्धार्थपरत्वेनैकवाक्यता घटते। तथाहि न किंचिद्वेदेनोपदिश्यते कर्तव्यम्। अतश्चाप्रमाणमेव वेदः स्यात्। विध्यर्थता चावगम्यमाना लिङादीनां त्यक्ता स्यात्। तस्मात्कार्यरूपो वेदस्य तत्त्वार्थ इति मनुर्भगवानाह। जैमिनिनाऽप्युक्तम् कार्येऽर्थे वेदः प्रमाणम् 'चोदनालक्षणोऽर्थो धर्म' इति।

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ॥
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ ५ ॥

"क अस्ताः क निपतिताः। शास्त्रोक्तनिपतितधर्मान् पृष्टस्तानेव वक्तव्यतया प्रतिज्ञाय जगतोऽव्याकृतावस्थावर्णनमप्रकृतमपुरुषार्थं च। सोऽयं सत्यो जनप्रवादः 'आम्रान् पृष्टः कोविदारानाचष्ट' इति। न चास्मिन् वस्तुनि प्रमाणं न च प्रयोजनमित्यतः सर्व एवायमध्यायो नाध्येतव्यः"।

उच्यते। शास्त्रस्य महाप्रयोजनत्वमनेन सर्वेण प्रतिपाद्यते। ब्रह्माद्याः स्थावरपर्यन्ताः संसारगतयो धर्माधर्मनिमित्ता अत्र प्रतिपाद्यन्ते। 'तमसा बहुरूपेण वेष्टिताः कर्महेतुनेति' (श्लो० ४९) वक्ष्यति च—'एता दृष्ट्वा तु जीवस्य गतीः स्वेनैव चेतसा। धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मन' इति (अ० १२ श्लो० २३)॥ ततश्च निरतिशयैश्वर्यहेतुर्धर्मस्तद्विपरीतश्चाधर्मस्तद्रूपपरिज्ञानार्थमिदं शास्त्रं महाप्रयोजनमध्येतव्यमित्यध्यायतात्पर्यम्।

मूलं त्वत्र मन्त्रार्थवादाः सामान्यतो दृष्टं च। तथा च मन्त्रः। "तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम् तुच्छेनाभ्वपिहितं यदासीत्तपसस्तन्महिनाऽजायतैकम्"। (ऋग्वेद १०।१२९।३)। चन्द्रार्काग्न्यादिषु बाह्याध्यात्मिकेषु महाप्रलये प्रकाशकेषु नष्टेषु तम एव केवलमासीत्। तदपि तमः स्थूलरूपतमसा गूढं संवृत्तम्। न हि तदानीं कश्चिदपि ज्ञाताऽस्ति। अतो ज्ञातुरभावान्न कस्यचित् ज्ञानमस्तीति तमसा गूढमुच्यते। अग्रे भूतसृष्टेः प्राक् अप्रकेतमज्ञातं सर्वं आः आसीत्। इदं सलिलं सरणधर्मकम्, क्रियावत् यत्किंचिच्चेष्टावत्तत्सर्वं निश्चेष्टमासीत्। तुच्छेन सूक्ष्मेणाभु स्थूलमपिहितं प्रकृत्यात्मनि विशेषरूपं लीनमित्यर्थः। एतावताऽव्याकृतावस्था जगतो द्योतिता। चतुर्थेन पादेनाद्या सृष्ट्यवस्थोच्यते। तपसस्तन्महिना महत्त्वेन एकं यदासीत्तदजायत विशेषात्मनाऽभिव्यज्यते स्म। कर्मवशात्पुनः प्रादुर्बभूवेत्यर्थः। अथवा तस्यामवस्थायां तपःकर्मणा महत्त्वेन हिरण्यगर्भ आत्मनाऽजायत प्रादुरासीत्। यथा वक्ष्यति 'ततः स्वयंभूरिति' (श्लो० ६)।

सामान्यतो दृष्टेन महाप्रलयोऽपि संभाव्यते। यस्य ह्येकदेशे नाशो दृष्टस्तस्य सर्वस्यापि नाशो दृश्यते। यथा शालाऽपि कचिद्दह्यमाना दृष्टा कदाचित्सर्वा

ग्रामो दह्यते। ये च कर्तृपूर्वा भावास्ते सर्वे विनश्वरा गृहप्रासादादयः। कर्तृपूर्वं चेदं जगत्सरित्समुद्रशैलाद्यात्मकम्। अतो गृहादिवन्नङ्क्ष्यतीति संभाव्यते। "कर्तृपूर्वतैव न सिद्धेति" चेत्तन्निवेशविशेषवत्त्वादिना गृहादिवत्साऽपि साध्यत इत्यादि सामान्यतो दृष्टम्।

न च प्रमाणशुद्धौ तद्दूपणे वा प्रयतामहेऽनिदंपरत्वाच्छास्त्रस्य। एतद्धि यावन्न विचार्य निरूपितं तावन्न सम्यगवधार्यते। तथानिरूपणे च तर्कशास्त्रता स्यान्न धर्मशास्त्रता ग्रन्थविस्तरश्च प्रसज्यते।

प्रक्रियाबहुलं चेदं सर्वमुपन्यसिष्यते। क्वचित्पौराणी प्रक्रिया, क्वचित्सांख्यानाम्। न तया ज्ञातयाऽज्ञातया वा कश्चिद्धर्माधर्मयोर्विशेष इति निपुणतया न निरूप्यते। अर्थिता चेत्तत एवान्वेष्या। पदार्थयोजनाव्याख्यानमात्रं त्वध्यायस्योपदिश्यते तदेव करिष्यामः। तात्पर्यमुपदर्शितमेव।

आसीदिदं जगत्तमोभूतं तम इव। भूतशब्दोऽनेकार्थोऽह्युपमायां प्रयुक्तः। यथा 'यत्तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्द इति' सामान्यभूत इति सामान्यमिवेत्यर्थः। किं तमसा जगतः सादृश्यमत आह अप्रज्ञातम्। विशेषाणां स्वभावानां विकाराणां प्रकृतावुपलयनादतः प्रत्यक्षेणाज्ञातम्। अनुमानात्तर्हि ज्ञायेत, तदपि चालक्षणम्। लक्षणं लिङ्गं चिह्नं, तदपि तस्यामवस्थायां प्रलीनमेव, सर्वविकाराणां विशेषात्मना विनष्टत्वात्। अप्रतर्क्यम्। यद्रूपमासीत्तर्कयितुमपि न तद्रूपतया शक्यम्। सर्वप्रकारमनुमानं निषेधति। न सामान्यतो दृष्टमनुमानमस्ति। तद्रूपकावेदकं न विशेषतो दृष्टमतश्चाविज्ञेयम्। नैव तर्ह्यासीदसदेवाजायतेति प्राप्तमेतन्निषेधति प्रसुप्तमिव सर्वतः। नासतः सत उत्पत्तिः। उक्तं च 'सदेव सोम्येद-मग्र आसीत् कथमसतः सज्जायेते' त्याद्युपनिषत्सु। अतश्चाविज्ञेयमवच्छेदविषयैः प्रमाणैः। आगमात्तादृशादेव गम्यते। प्रसुप्तमिव जाग्रत्स्वप्नवत्तां परित्यज्य संप्रसा-दावस्था सुषुप्तिर्दृष्टान्तत्वेनोपात्ता। यथा अयमात्मा सुषुप्त्यवस्थायां निःसंबोधक्लेश-प्रध्वस्ताशेषविकल्प आस्ते, न च नास्तीति शक्यते वक्तुं, प्रबुद्धस्य सुखमस्वाप्समिति प्रत्यभिज्ञानदर्शनात्, एवं जगदागमात्सिद्धार्थरूपादाभासानुमानेभ्यश्च तार्किका-णामवसीयते। आसीदिति। वर्तमाना तु साऽवस्था न कस्यचित् विज्ञेयेत्यत उक्तमविज्ञेयम्। सर्वतो नैकदेशप्रलय इत्यर्थः॥ ५ ॥

